# गलदृक् शिक्षा

इषेत्त्वाऽश्वस्तूपरः समिद्धोऽग्रञ्जन्त्सहस्त्रशीर्षा पुरुषस्तदेव स्वाहा प्राणेभ्यश्चेत्येतेष्वध्यायेषु न गलिता ऋचः । द्वितीयेऽध्यायेऽग्ने व्रतपतऽइति पश्चात्प्रविष्टाऽतस्त्र्यस्त्रिंशत् । तृतीयेऽध्यायेऽयमग्निः पुरीष्य इति प्रविष्टाऽतो द्विषष्टिः । पञ्चमेऽध्यायेऽग्ने व्रतपाश्च प्रविष्टोरु व्विष्णो गतोऽतएकचत्वारिंशत् । षष्ठे ध्याये प्रथमा ऋग्गलितारेवतीरमद्ध्वमित्यत्र देवस्य त्वा एवं पञ्चत्रिंशत् । वाचस्पतय इत्यत्र स्वाङ्कृतोऽसि ग्रात्मने मे सम्पृक्ते । अयन्नोऽग्नेनयलुप्तत्वाच्चतुश्च त्वा-रिंशत् । अादित्येभ्यस्त्वेत्यत्र कदाचन । सँव्वर्च्चसा युग्देवा गातुविदऽउदुत्त्यमवभृथनिचुम्पुणो शिक्त्वं गलिते सप्त षट्पञ्चाशत् । देव सवितरित्यत्र देवस्याहमेकोनचत्वारिंशत् । अपो देवाऽइत्यत्र सोमस्य त्विषिरिमं देवा लुप्ता द्वात्रिंशत् । युञ्जान इत्यत्र युञ्जते मनो व्विश्श्वो देवस्य देव सवितः पृथिव्याः सधस्थाद् वसवस्त्वाच्छृदन्तुमिलिताष्टाशीतिः । दृशानऽइत्यत्र हंसः शुचिषदक्रन्ददग्निर्द्दे दृशानो रुक्मः समिधाग्नि पुनरुर्ज्जा सहरय्याऽयन्ते भवतन्नऽइति मिलिता अष्टोत्तर-शतम् । मयि गृह्णाम्यग्निर्म्मूर्द्धा प्रविष्टाऽअपाम्पृष्ठं महीद्यौर्व्विष्णोः कर्माणि चित्रन्देवानां त्रिपञ्चाशत् । ध्रुवक्षितिः शुक्रश्च विश्वकर्मा त्वा द्वे नभश्चेषश्च राज्ञ्यसि मिलितं सहश्च षट्त्रिंशत् । अग्ने जातानग्निर्म्मूर्द्धा त्वामग्ने पुष्करादधि भुवो यज्ञस्यायमिहाग्ने त्त्वमयन्ते लोकम्पृणाताऽअस्येन्द्रं विव्वा न चैता लुप्यन्ति परमेष्ठी त्वा द्वौ मिलिता चतुः पञ्चाशत् । नमोऽस्तु नीलग्रीवाय नमोऽस्तु रुद्द्रेभ्यो द्वौ मिलित्त्वाऽतस्त्रिषष्टिः । अश्मन्नूर्ज्जं

हिमस्य त्वा व्वाचस्पतिं विश्वकर्मन्हविषोदुत्वेंद्रँ विश्वा नक्तोषासाऽग्ने तं सप्तनवतिः । वाजश्च देवस्य त्त्वा वाजस्य नु यास्ते या वऽउद्बुध्यस्व येन व्वहसि विनस्त्वँय् यविष्ठैकोनसप्ततिः । स्वाद्वीन्त्वा व्वायोः पूतः कुविदङ्ग त्रिणवतिः । क्षत्रस्य योनिः समद्रे तऽ उपयामगृहीतोऽसि पुत्रमिव निषसाद यदि जाग्रद्यदापो यदि दिवा यत्रेन्द्रश्च युवं सुराममिति नवतिः । इमम्मे तन्त्वा शन्नो वाजेवाजेऽवत होता यक्षदिनमृषभस्येति सरस्वतीम्मेषस्येति प्रविष्टाः सप्तपञ्चाशत् । तेजोऽसि तत्त्सवितुर्विश्वोदेवस्य पृथिव्यै स्वाहा मधवे स्वाहा वाजाय स्वाहाऽसवे स्वाहेति प्रविष्टा एकोनविंशतिः । हिरण्यगर्भः कुविदङ्ग कः स्वित्सूर्यऽएकाकी स्विद्द्यौराशसीदुपयामगृहीतोऽसि सप्तपञ्चाशत् । शादन्दद्भिर्हिरण्यगर्भो यः प्राणतोऽग्ने त्वञ्चतुश्चत्वारिंशत् । अग्निश्च वैश्वानरो नः पञ्च विंशतिः । समास्त्वोद्वयञ्चतुश्चत्वारिंशत् । होता यक्षद्देवा दैव्या शुचिमुष्णिहानन्तरं सर्वाऽनः पञ्चत्रिंशत् । देव सवितस्तत्त्सवितुर्विंशत् । अस्या ज रासो युक्ष्वा ह्ययमिह मूर्द्धानन्दिवऽउदुत्त्यं विश्वेऽअद्येन्द्र वायू यज्ञो देवानां गावऽउप दैव्यावद्धर्य्यूऽअदब्धेभिः सप्ताशीति । यज्ञाग्रतऽआकृष्णेन सप्तपञ्चाशत् । अपेतोऽश्वत्थे वः सुमित्रियांनऽउदद्वयमन्नऽआयूंषि ह्यष्टादश । ऋचँव्वाचम्भूर्भुवः कया नः कस्त्वा स्योना पृथिवि आपो हिष्ठेति तिस्रो नमस्ते हरसे सुमित्रिया नोऽभीषुणो दृते दृंह त्रयोदश । देवस्य त्वा देवी द्यावा पृथिवीऽन्द्रस्यौजोऽश्वस्य त्त्वा ऋजवे त्वे यत्त्यग्रे प्रविष्टास्त्रयो हृदे त्वा युञ्जते मनः प्रैतु

मखस्य शिरस्त्रयोदश । देवस्य त्वा सुमित्रिया नऽ उद्वयमेधोऽसीडऽ ह्यदित्यै रास्नासीन्द्राय त्वा षड् द्वाविंशत् । ईशावास्यमन्धन्तमोऽन्यदेव सम्भूतिं च मिलितास्त्रयोऽग्नेनय त्रयोदश । एवं चतुष्षष्टित्रृचो विलुप्तौ एकादशोत्तर शतानि ऋचोऽधिकाश्च । एवं कृते धृतिशतान्यपिसङ्ख्यकाश्च प्रोक्ताः समार्यैः खलु कण्डिकाश्च १

इति लुप्तर्क्सङ्ख्यात्मिका शिक्षा समाप्ता